## चारित्रेण च को युक्तस्सर्वभूतेषु को हितः ।
## विद्वान्कः कस्समर्थश्च कश्चैकप्रियदर्शनः ॥1.1.3 ॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

कः च चारित्रेण युक्तः? कः सर्वभूतेषु हितः? कः विद्वान्? कः च समर्थः? कः च एकप्रियदर्शनः?

- अन्वयार्थः

सच्चरित्रः कः अस्ति? सर्वेषां भूतानां हितचिन्तकः कः? कः ज्ञानी? कः कार्यसम्पादन-सामर्थ्यवान्? कः सर्वेषां प्रियः अस्ति?

चारित्रेण च को युक्तस्सर्वभूतेषु को हितः ।
विद्वान्कः कस्समर्थश्च कश्चैकप्रियदर्शनः ॥1.1.3॥

- पदपरिचयः
  - चारित्रेण – चारित्र, नपुं, तृतीया, एकवचनम्
  - च - अव्ययम्
  - कः – किम्, पुं, प्रथमा, एकवचनम्
  - युक्तः, हितः, समर्थः, एकप्रियदर्शनः – युक्त, हित, समर्थ, एकप्रियदर्शन – पुं, प्रथमा, एकवचनम्
  - (एकं – केवलं – प्रियं दर्शनं यस्य सः)
  - सर्वभूतेषु – सर्वभूत, नपुं, सप्तमी, बहुवचनम् (सर्वाणि च तानि भूतानि च)
  - विद्वान् – विद्वस्, पुं, प्रथमा, एकवचनम्

## आत्मवान्को जितक्रोधो द्युतिमान्कोऽनसूयकः ।
## कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥1.1.4॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

कः आत्मवान्? कः जितक्रोधः द्युतिमान् अनसूयकः? देवाः च संयुगे जातरोषस्य कस्य बिभ्यति?

- अन्वयार्थः

कः जितेन्द्रियः? कः जितक्रोधः? कः कान्तिसम्पन्नः? असूयारहितः कः? देवाः च युद्धे सञ्ज्ञातक्रोधात् कस्मात् भयम् अनुभवन्ति?

# आत्मवान्को जितक्रोधो द्युतिमान्कोऽनसूयकः ।
# कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥1.1.4॥

- पदपरिचयः
  - आत्मवान्, द्युतिमान् – आत्मवत्, द्युतिमत् – पुं, प्रथमा, एकवचनम्
  - कः – किम्, पुं, प्रथमा, एकवचनम्
  - जितक्रोधः, अनसूयकः – जितक्रोधः, अनसूयक - पुं, प्रथमा, एकवचनम्
  - कस्य – किम्, पुं, षष्ठी, एकवचनम्
  - बिभ्यति – भी, लट्, प्रथमपुरुषः, बहुवचनम्
  - देवाः – देव, पुं, प्रथमा, बहुवचनम्
  - च - अव्ययम्
  - जातरोषस्य – जातरोष, पुं, षष्ठी, एकवचनम्
  - संयुगे – संयुग, पुं, सप्तमी, एकवचनम्

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥1.1.5 ॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

महर्षे, अहम् एतत् श्रोतुम् इच्छामि। हि मे परं कौतूहलम् (अस्ति)। त्वं एवंविधं नरं ज्ञातुं समर्थः असि।

- अन्वयार्थः

महर्षे, मम पूर्वोक्तविशेषणैः सहितस्य नरस्य विषये श्रोतुम् इच्छामि। मम अस्मिन् विषये महती उत्कण्ठा वर्तते। भवान् एतादृशं नरं ज्ञातुं समर्थः अपि अस्ति।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies
धियो विश्वा विराजति।

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥1.1.5॥

- पदपरिचयः
  - एतद् – एतद्, सर्वनाम, नपुं,द्वितीया, एकवचनम्
  - इच्छामि – इष्, लट्, उत्तमपुरुषः, एकवचनम्
  - अहम् – अस्मद्, सर्वनाम, प्रथमा, एकवचनम्
  - श्रोतुम् – तुमुन्नन्तम् अव्ययम्
  - परम्, कौतूहलम् – पर, कौतूहल – नपुं, प्रथमा, एकवचनम् (कुतूहलस्य भावः, युवादित्वात् अण्)
  - हि - अव्ययम्
  - मे – अस्मद्, सर्वनाम, षष्ठी, एकवचनम्
  - महर्षे – महर्षि, पुं, सम्बोधनम्, एकवचनम्

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥1.1.5॥

- पदपरिचयः
  - त्वम् – युष्मद्, सर्वनाम, प्रथमा, एकवचनम्
  - समर्थः – समर्थ, पुं, प्रथमा, एकवचनम्
  - असि – अस्, लट्, मध्यमपुरुषः, एकवचनम्
  - ज्ञातुम् – तुमुन्नन्तम् अव्ययम्
  - एवंविधम्, नरम् – एवंविध, नर - पुं, द्वितीया, एकवचनम्